# MADIROTSAVA

(RUBAIYAT OF OMAR KHAYYAM)



AUTHOR :

P. V. KRISHNAN NAIR, B.O.L.,

*Maharaja's College, Ernakulam.*

FOREWORD

BY

Sachivothama Sir C. P. RAMASWAMY AIYAR.

NOTES

BY

Panditaraja P. S. ANANTHANARAYANA SASTRY.





PUBLISHED BY

SARASWATHI (ELEC.) PTG. & PBG. HOUSE.

TRICHUR,

Price Re 1]     1945 June/1120 Mith.     [मूल्यम् रू. १

## ॥ समर्पणम् ॥

१

साहित्यमाध्वीरसपूर्णचित्त-
स्साम्राज्यतन्त्रार्णवपारदृश्वा ।
जागर्ति योऽनन्तपुरे नितान्त-
माशान्तविश्रान्तयशःप्रभावः ॥

२

आर्याय तस्मै 'सचिवोत्तमाय
श्री"राम"धाम्ने विबुधाधिपाय ।
नुभस्समुत्फुल्लसमादरेण
समर्पयेऽहं लघुकाव्यमेतत् ॥

# FOREWORD

Mr. P. V. Krishnan Nair has published a Sanskrit translation or rather a paraphrase in verse, of the Rubaiyat of Omar Khayyam. He has utilised the English rendering of that classic by Fitzgerald which is perhaps more famous than the original Rubaiyat itself. The versification adopted is simple and the phrasing is often felicitous. There have been many attempts to translate Fitzgerald's Omar Khayyam and quite recently I saw Sirdar Panikkar's translation of these verses into Malayalam. have been informed

that there is only one Sanskrit translation of this work which was the work of a Bengalee scholar.

The idea of the author was originally to produce a literal translation, but he has, in my opinion, wisely put aside that idea so as to avoid topical references and allusions to Persian life and personages which may be incomprehensible to the average Indian reader. In the result he has performed meritoriously a task which is one of immense difficulty. Fitzgerald's Omar Khayyam is a book in which subdued humour and cynicism, sometimes gentle and sometimes even savage, are blended

with a love of the good things of life and with an authentic mystic philosophy compounded of many elements that cannot be expressed easily in a language with a different genius and tradition. That the task has been attempted and achieved so well reflects no small credit on the author whom I heartily congratulate on his effort.

C. P. RAMASWAMI AIYAR,

22—12—1944.



*Sachivothama Sir C. P. Ramaswamy Aiyar*

# ॥ मन्दिरोत्सवः ॥

निद्रां त्यज द्राक्; क्षणदाजिरङ्गा-
द्विद्रावयंस्तारगणान् पुरस्तात् ।
व्योम्नस्त्रियामामपि भानुमाली
हेतिं प्रयुङ्क्ते नृपहर्म्यशृङ्गे ॥

२

तिरोभवात् प्रागरुणोदयस्य
वचः श्रुतं पानगृहान्मयेदम् ।
"देवालयेऽस्मिन्नखिलेऽपि सज्जे
बहिः किमित्थं स्वपितीह भक्तः" ?

३

कूजत्युदारं चरणायुधे केऽ-
प्याहुर्बहिर्नात्र चिरं निवासः ।
यातस्य न स्यात् पुनरागतिःस्त-
दुद्घाट्यतां द्वारकवाटमेतत्" ॥

४

उद्दीपयन्ती गतजीर्णकामान्
समा समायाति नवाभिरामा ।
सितप्रसूनैश्च सुगन्धिवातैः
कान्तं वनान्तं मुनयः श्रयन्ते ॥

५

प्रख्यातसम्राण्मधुपानपात्रं
वरं महोद्यानपुरं च नष्टम् ।
द्राक्षास्तथाप्युज्ज्वलपद्मरागा
विभान्ति; वाटाश्च सरित्तटेषु ॥

६

सङ्कीर्तकास्यं विधिना पिनद्धः
किन्त्वार्यवाचा पिक एवमाह ।
"रोजे, सुरक्तं मधु साधु पायं
पायं तवाताम्रय पाण्डुगण्डम् ॥

७

पात्रं समापूरय; शोकभार-
हेमन्तवस्त्रं क्षिप माधवाग्नौ ।
शिष्टाल्पवर्त्मा पटुकालपत्री;
तस्याद्य पक्षौ डयनोद्यतौ च ॥

८

विख्यातपुर्यामवरे पुरे वा
पात्रस्थशीधौ मधुरे कटौ वा ।
जीवाख्यमद्यं कणशश्च्युतं स्या-
दायुःपलाशः क्रमशः पतेच्च ॥

९

काल्योपनीतानि सुमान्यसंख्या-
न्यन्येधुरेवं क्वनु संप्रयान्ति ।
तथा वसन्तः कुसुमैरुपेया-
द्वीरप्रतापान् नृपतीन् हरेच्च ॥

१०

महाप्रभावाः क्षितिपा ह्रियन्तां
दुर्वारकालेन; किमत्र तैर्नः?
गर्जन्तु मल्लाः; प्रभवस्सुहृद्भ्यो
यच्छन्तु सन्धिं; क इहोत्सुकः स्यात् ?

११

व्रजाव वामोरु, मरोः परस्ता-
त्तस्याढ्यदेशं नयनाभिरामम् ।
नास्त्येव यस्मिन् प्रभुभृत्यभेदः
सिंहासने किं नृपतेः प्रशान्तिः?

१२

यत्राच्छसुच्छायतरोरधस्ता-
त्काव्यं रसार्द्रं मधुपात्रपूर्णौ ।
सङ्गीतभङ्गीमधुरा च कान्ता
कान्तारदेशोऽपि स नाकलोकः ॥

१३

वाञ्छन्ति केचिद्भुवि भूरिभूतिं
परे तु पारत्रिकसौख्यपङ्क्तिम्
भुङ्क्ष्वाद्य * सिद्धं; नहि चिन्तयेस्त्व-
§ मुद्धाररिक्थं, पटहं च दूरे ॥

१४

वीक्षस्व रोजां; ननु सा ब्रवीति —
"जातास्मि लोके स्मितभूषितास्या ।
उद्घाट्य कौशेयकरोटकं मे
सम्पत्तिसारं विकिरामि सद्यः" ॥

* Cash. § Credit.

१५

वर्तेत मर्त्यो धनजीवितो वा
विचेन वृष्टिं परितः किरन् वा ।
हेमीभवेतां नहि तौ परेतौ;
निखाय तौ कश्चन नोद्धरेच्च ॥

१६

समूलदग्धा नरभौतिकाशा
जायेत; सद्यस्सफलीभवेद्वा ।
यथा मरौ हैमकणस्तथासौ
निमेषकालं परिदीप्य गच्छेत् ॥

१७

मन्यस्व, पान्थायतनं प्रजीर्ण-
महर्निशाद्वारयुतं पुराणम् ।
अध्युष्य साडम्बरमल्पकालं
दैवेन दत्तं नृवरा निरीयुः ॥

१८

उन्मत्तसम्राण्मधुपानरङ्गं
    सौधं मृगेन्द्रः सरटश्च पाति ।
आखेटभूभृत्प्रबलः स्वशीर्षे
    खरे प्रनृत्यत्यपि गाढनिद्रः ॥

१९

तादृक्षरागा विलसेन्न रोजा
    रक्तान्नचेद् वीरनृपस्य जाता ।
तथाभिरामं नवकेतकं त-
    द्धम्मिल्लभारात्सुतनोर्विमुक्तम् ॥

२०

अयं हि दिव्यौषधिरात्तराग-
    श्चुम्बत्यमुष्यास्सरितस्तटास्यम् ।
शेष्वानुकम्पाललितं त्वमल;
    जन्मास्य शोणाधरसंभृतं स्यात् ॥

२१

आगामिभीतिं गततापमार्ये,
यद्भाजनं हन्त्यभिपूर्यतां तत् ।
श्वस्त्वस्य चिन्तां विजहीह्यहं श्वो
लीनो भवेयं पुरुभूतकाले ॥

२२

कालेन मृद्वीरभिषुत्य लब्धे-
ष्वस्माकमिष्टाः सुभगाश्च सन्तः ।
प्राग्द्वित्रवारं मदिरां निपीय
विश्रान्तिभूमिं क्रमशः प्रसुप्ताः ॥

२३

तैस्त्यक्तकोष्ठेऽद्य रसाल्लसामो;
मधुश्च वस्ते नवसूनपट्टम् ।
तल्पं भवेन्नः पृथिवी; भवेम
तल्पं—न विद्मः—कतमस्य पश्चात् ॥

२४

पूर्वं शरीरस्य मृदि प्रपाता-
    द्दिष्टं तु शिष्टं ससुखं नयामः ।
मृन्मात्रगात्रं मृदमेति; तत्र
    सीधुर्न, नान्तो, न च गातृगाने ॥

२५

इच्छन्ति केचित्सुखमद्य; केऽपि
    "श्व एव तत्स्यादि"ति चिन्तयन्ति ।
तान् ध्वान्तसौधाद्वदतीत्थमेको
    "न तत्र, नेहापि जडाः फलं वः" ॥

२६

लोकद्वयीवादविशारदास्ते
    मन्दात्मतुल्यं यमिनः प्रमृष्टाः ।
तेषां समस्तं वचनं निरस्तं;
    वाचालमास्यं च मृदाभिनद्धम् ॥

२७

तारुण्यकाले बहुशस्सतृष्ण-
स्तत्त्वज्ञवादान् श्रुतवाञ्जनोऽयम् ।
येन प्रविष्टश्श्रवणार्थमादौ
तेनैव मार्गेण बहिर्गतश्च ॥

२८

ज्ञानस्य बीजं न्यवपं सहार्यै-
रपूपुषञ्चाहमलं करेण ।
लूनं समस्तं फलमेत''दाप्तो
वारीव, यास्याम्यनिलेन तुल्यः ॥

२९

कुतः, किमर्थं समगामिहेच्छा-
निच्छानपेक्षं सलिलप्रचारः ?
कुत्रेत्यजानन् जगतः परेयां
विनात्मयाञ्छां मरुवातवृत्तिः ॥

३०

विना मदीयानुमतिं कुतोऽहं
नीतोऽत्र ?; कुत्रास्म्यपनेष्यमाणः ।
वैयात्यचिन्तां व्यपनेतुमेतां
मद्यं निषिद्धं कियदद्य पेयम् ?

३१

उद्गत्य मध्याज्जगतोऽध्यतिष्ठं
सिंहासने सप्तमनाकलोके ।
ग्रन्थीन पथि व्यश्लथयं; विदग्ध-
ग्रन्थिर्विधेर्न श्लथितोऽणुनापि ॥

३२

आसीत्कवाटं, गतकुञ्चिकं त-
द्दृक्प्रवेशा जवनी च काचित् ।
वचश्श्रुतं तत्र मया तु "मां त्वा"-
मुद्दीश्य; पश्चात्तदपि प्रनष्टम् ॥

३३

दत्ते न पृथ्वी, तरलाब्धिवीची
प्रत्युत्तरं भर्तृवियोगदूना ।
प्रदर्श्य चिह्नानि दिनेन, रात्र्या
चाच्छाद्य चष्टे न चलन् विहायाः ॥

३४

अन्तर्जवन्या 'मयि' वर्तमानं
'त्वां' द्रष्टुमिद्धे तमसि प्रदीपम् ।
आदातुकामेन मया न्यशामि
बाह्यात्तदा'न्धस्त्वयि संस्थितोऽहम्' ॥

३५

मृत्पात्रमेकन्त्वगमं लघिष्ठं
मज्जीवितार्थाधिगमाय मन्दम् ।
स्पृष्ट्वास्यमास्येन तदाह गूढं
"मृतस्य नास्त्यागतिः;रापिबाद्य" ॥

३६

अव्यक्तवाक् पात्रमिदं कदाचि-
न्मन्ये,ऽभवन्मध्वपिबच्च नूनम् ।
मच्चुम्बने निष्क्रियमेतदासी-
द्दानग्रहेशं बहुचुम्बनानाम् ॥

३७

स्मरामि सम्प्रत्य;यने कुलालो
मृत्स्नां पुरा प्राहरदार्द्रदेहाम् ।
विलुप्तजिह्वा व्यलपत्तदा सा
"भ्रातश्शनैर्मां सदयं मृदान ॥

३८

आम्रेडितेनाल;मवार्यकालः
पलायतेऽलं; मदिरां प्रदेहि ।
दिनं यदीदं मधुरं, किमर्थं
नजातभव्यं च परेतभूतम् ? ॥

३९

एकः क्षणो नाशमरौ तथैव
संसारकूपं च निपातुमेकः ।
ताराण्यगच्छन्; वणिजश्च यान्ति
शून्यत्वकाल्यं; सुहृदस्त्वरध्वम् ॥

४०

वन्ध्येषु वादेषु गवेषणेषु
कालं कियन्तं मनुजा नयन्ति ।
अवन्ध्यमृद्ध्या विहृतिर्वरं नः
क्लेशस्य भाराद्विफलोद्यमानाम् ॥

४१

स्मरन्ति किं मत्सुहृदो भवन्तो ?
नवं सपीतौ कृतवान् विवाहम् ।
सन्त्यज्य वन्ध्यां जरठां च युक्तिं,
द्राक्षातनूजां दयितामवापम् ॥

४२

नीचोच्चचिन्तां, सदसद्विवेकं
रेखोन्मितं वा पुनरन्यथा वा ।
कर्तुं त्रिदग्धोऽप्यहमूढयत्नः
परं सुरायाः परिमाणकार्ये ॥

४३

ततः कदाचित्पुरुषोऽतिदिव्यो
गञ्जाकवाटेन समैत् प्रदोषे ।
स्कन्धेन धृत्वा किमपीह भाण्डं
पिबेत्यवोचत्; मदिरैव सापि ॥

४४

विरुद्धतत्त्वान् मतसम्प्रदायान्
शीधुर्निरस्येत प्रबलैः प्रमाणैः ।
स रासयोगी नरजीवसीसं
नूनं विदध्यादपि जातरूपम् ॥

४५

राजाधिराजोऽयमपारवीर्यो
    भीशोकमुख्यान् मनसो रिपूंस्तान् ।
सन्मन्त्रखड्गेन विपाट्य दूरी-
    कुर्याच्च लोकायतवादलोलान् ॥

४६

मज्जन्तु तर्केषु बुधप्रवेकाः,
    ब्रह्माण्डरोषा मयि संपतन्तु ।
क्रीडाव कान्ते, विजने विशङ्कं
    यथेष्टदानग्रहसम्प्रमत्तौ ॥

४७

उपर्यधो वा बहिरन्तरे वा
    मायाविमायाविहृतिः प्रपञ्चः ।
केलिस्समुद्रे; तरणिः प्रदीपो
    नटा नरा मायिकरूपभाजः ॥

४८

पीतश्च शीधुर्मधुरोऽधरोऽन्ते
शून्यत्वमीयाद्यदितस्तदास्ताम् ।
जीवे च मृत्यौ सदृशी दशा ते;
द्वयं च तुल्यं स्मर नित्यशून्यम् ॥

४९

तिष्ठन्ति रोजास्सरितां तटेषु;
मया सहेमां मदिरां पिबार्ये ।
कालेन पश्चादुपनेष्यमाणां
नीलाश्व हालमसिपातुमर्हां ॥

५०

अहर्निशाभासुरशारिपट्टे
खेलत्यजस्रं नियतिर्नराक्षैः ।
सञ्चाल्य, संरोध्य, निहत्य चान्ते
क्रमेण शारीः क्षिपति प्रपेटे ॥

५१

किञ्चिन्न पृच्छन्नपि कन्दुकोऽसौ
चित्तानुरोधाद्विसरेद्विहर्तुः ।
स वेत्ति सर्वं निपुणस्स वेत्ति
स वेत्ति यस्त्वां क्षिपति स्म भूमौ ॥

५२

चरन् करोऽयं लिखति; प्रलिख्य
चरेत्पुरस्तात् ; परया च भक्त्या ।
मत्याश्च शक्त्या बहुबाष्पवृष्ट्या
वर्णस्य लेशं नहि मार्जयेत्सः ॥

५३

पर्यस्तवक्त्रश्चषकोऽन्तरिक्षं
कारोप्रवासं तदधश्चरामः ।
मा प्रार्थयध्वं गगनं त्वशक्तं
अमर्त्यजस्रं मनुजोपमं तत् ॥

५४

भूत्वाद्य मृत्स्नां विदधेऽन्त्यमर्त्य-
मन्त्यार्थलब्ध्यै न्यवपच्च बीजम् ।
निर्माणकालस्य नवप्रभाते
लिलेख धातान्तिमकाव्यवाच्यम् ॥

५५

प्रस्थाय लक्ष्याद्गगनोज्ज्वलाश्वे
प्रपञ्चमार्गां गुरुकृत्तिकाभिः ।
मृदात्मभूमौ मम क्लृप्तकर्म-
ण्युवाप मूर्द्धीं विधिराचमोदम् ॥

५६

द्राक्षा प्ररूढा; मम जीवसत्ता
जागर्ति चास्यां; व्रतिनो हसन्तु ।
मत्सीसवृत्ता लघुकुञ्चिकैत-
दुद्घाटयेत्तैरररं निरुद्धम् ॥

५७

स्निह्येदयं मय्यमलप्रकाशो
दहेदरं मामथवा सरोषः ।
देवालये पूर्णविनष्टवीक्षा-
द्दूरं हि गङ्गाधिगतोऽस्य लेशः ॥

५८

मार्गे विकीर्णे मदिरान्धकूपै-
स्त्वयैव सृष्टैर्यदिवा स्खलेयम् ।
पूर्वं भवत्कल्पितकर्मधर्मं
निन्दीरिमं मा विधुरं विधातः ॥

५९

पङ्कैर्विगर्ह्यैरसृजः पुमांसं;
पापाहिघोरां सुरलोकवाटीम् ।
क्षमस्व पापं नरवक्त्रपङ्कं
याचस्व मर्त्यान् नियते, क्षमाञ्च ॥

६०

व्रतावसाने विमलप्रदोषे
चन्द्रोदयात्प्राग्घटकारगेहे ।
पंक्तिस्थितानां सखि, मृत्कृतानां
मध्यं घटानामहमध्यतिष्ठम् ॥

६१

केचिद्विचित्रं वचसि प्रवीणाः;
परे तु वक्तुं नहि पारयन्ति ।
जुघोष वेगादसहिष्णुरेकः
"कः कुम्भकारो?, वद, कश्च कुम्भः?"

६२

एकस्तदानीमभणत्"वृथा न
मां निन्द्यपङ्केरसृजत् कुलालः ।
मद्रूपनिर्माणपटुस्स बाढं
भित्त्वा पुनर्मां मृदमेव तन्यात् ॥

६३

अवोचदन्यो "नहि पीतशीधुं
चण्डोऽपि बालश्चषकं प्रभङ्क्ता ।
प्रेम्णा स्वयं यो निरमात्सुभाण्डं
क्रुद्धः पुनस्तत् किमु भेत्स्यते सः ?

६४

सर्वेषु तूष्णीमथ तस्थिवत्सु
विरूपगात्रो घट एवमूचे ।
"हसन्ति मर्त्या विकलाङ्गमेतं
कर्तुः करः किं चलति स्म सृष्टौ"

६५

"लिम्पन्ति लोका नरकस्य धूमै-
र्घोरप्रभोरास्यमलं सनिन्दम् ।
नास्मान् परीक्षेत कृती कुलालो
हिंस्यान्न चासौ" पर एवमाह

६६

सदीर्घनिश्श्वासमभाषतैको
“मृन्मेऽतिशुष्का स्मृतिनाशदैर्घ्यात् ।
मार्द्वीकपूरैः परिपूरितश्चे-
न्नवां प्रपत्स्ये क्रमशः प्रदीप्तिम् ॥

६७

कुम्भेष्वथैवं निगदत्सु कोऽपि
प्रतीक्षितां चन्द्रकलामपश्यत् ।
प्रोचुस्समं ते “भरवाहकस्य
स्कन्धस्य सन्धेश्शृणुत प्रभङ्गम्” ॥

६८

मत्क्षीणदेहाय सुरां प्रयच्छ;
निर्जीवगात्रं मधुनाभिषिञ्च ।
द्राक्षाप्रवालैः परिवृत्य शोणै-
रम्योपवाटे निखन प्रिये, माम्

६९

निखातदेहस्य परागराशि-
स्समीरपूरे विकिरेत्सुगन्धम् ।
आस्तिक्यसिद्धान्तनिबद्धचित्ता
गच्छन्त्वविज्ञाय पथा न विज्ञाः ॥

७०

ममेष्टदेवाश्चिरपूजितास्ते
मदीयकीर्तिं विमलां बभञ्जुः ।
न्यमज्जयन् गाधनिपेऽभिमानं;
गीतस्य हेतोर्व्यपणन् समज्याम् ॥

७१

अतन्वि भूयोऽनुशयप्रतिज्ञां;
तदाहमासं किमु बोधयुक्तः ?
ततः प्रविष्टः कुसुमैर्वसन्तो
व्यस्मार्षमद्धा शपथानुतापौ ॥

७२

अवञ्चयन्मां बहुधा स सीधु-
मन्मानमुद्रां समचूचुरच्च ।
तथापि, मन्ये, मदिरोपजीवी
मूल्यार्धमेयं निमयं न विन्देत् ॥

७३

मधुस्तिरोभावमियात्सखन-
स्तारुण्यलेखस्सुरभिश्च गन्ता ।
शाखासु गायन् स पिकोऽपि कुत्र
कुतः प्रडीनो?; नहि वेत्ति कश्चित् ।

७४

विध्यानुकूल्याद्यदि गूढतन्त्रै-
र्दूनप्रपञ्चस्य विधां वहावः ।
कुर्याव तां किं शतशो न शीर्णा?;
यथेच्छमावां न सृजेव नूनाम् ? ॥

७५

अक्षय्यमोदेन्दुकले, विहाय
स्सुधांशुलेखा पुनरप्युदेति ।
उद्धृत्य भूयः कतिवारमेषा
वृथात्र वीक्षेत च मां दिदृक्षुः ? ॥

७६

आगन्तुताराकुलशाद्वलेऽसि
आनन्दसन्देशहरा चरित्वा ।
न्यस्येर्मदीयं मदमीयुषीत्वं
पर्यस्तशून्यं चषकं मदास्ये ॥

# ॥ टिप्पणी ॥

प्रवृत्तिर्वा निवृत्तिर्वा तत्त्वबोधनिबन्धना ।
अतस्तत्त्वावबोधाय विवृतिः क्रियते मया ॥

विवर्तकस्य सौहार्दं मूलग्रन्थस्य सौष्ठवम् ।
प्रेरकं द्वयमेतन्मे न वैदुष्यं न कौतुकम् ॥

(१) उदयास्तमयाभ्यामायुरंशमपहृत्य प्राणिजातं लोकरङ्गात्तिरोभावयतो भानुमालिन उदये वीरभटसमाधिना प्रस्तौति—निद्रामिति—क्षणदा रात्रिरेवाजिरङ्गः रणाङ्गणं तस्मात् । त्रियामां रात्रिम् । व्योम्नो विद्रावयन्नित्यन्वयः । अजय्यस्यास्य विद्रावणे स्त्रीपुंभिदापि नास्तीति गम्यते । हेतिः किरणरूपमायुधम् । राजगृहशिखरेऽपि हेतिप्रयोक्तुरस्य नोच्चनीचगणनापि ।

(२) अरुणोदयपदेन प्राभातिकप्रभाप्रसरो लक्ष्यते । देवालये मदिराभक्तानामाराधनस्थाने पानगृहे । भक्तः मधुसेवकः ॥

(४) चरणायुधः कुक्कुटः । नातिचिरमित्यादिवाक्यं जीवितस्य क्षणभङ्गुरतां बोधयति । कवेः पुनर्जन्मनि प्रत्ययो नासीदिति च प्रतिभाति ॥

(५) समा संवत्सरः । प्रतिक्षणपरिणामिनि प्रपञ्चे विनश्यत्स्वपि भावेषु नववार्तां रमणीयवस्तूनामविच्छिन्न एवाविर्भाव इति संपिण्डितार्थः ॥

(५) प्रख्यातस्य सम्राजः सार्वभौमस्य प्रियं मधुपानपात्रं मधुपानस्थानं मनोहरं महोद्यानपुरमपि विनष्टम्। पद्मरागशब्देन तदभिन्नतयाध्यवसितानि द्राक्षाफलानि बोध्यन्ते। शोभातिरेको गम्यः। वाट उद्यानम्॥

(६) संकीर्तकः गुणगायकः। पिनद्धं बद्धम्। स पञ्चतां गत इत्यर्थः। रोजे इति पुष्पवेषस्य संबुद्धिः। सुरक्तमिति मधुविशेषणं। आताम्रय समन्तात्ताम्रवर्णं कुरुष्व॥

(७) शोकभारस्य हेमन्तवस्त्रत्वरूपणेन दृढसंलग्नता द्योत्यते। माधवाग्निः वसन्तरामणीयकहुतवहः। कालपत्री जीवितकालपक्षी॥

(८) प्रथमपाद उच्चनीचावस्थयोर्द्वितीयपादः सुखदुःखसंघटनयोश्चाभिव्यञ्जकः। शीधुर्मद्यम्। पलाशः पर्णम्॥

(९) काल्यं प्रभातम्। अनिवार्यशक्तिरप्रतिहतगतिः कालः सर्वसंहारकर्तेति भावः॥

(१०) सग्धिः सहभोजनोत्सवः। "यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः। वयं हनामः द्विषतः सर्वः स्वार्थं समीहते॥" इत्युक्तरीत्या वयं मधुरसास्वादसुखाय सज्जीभवामः इत्यर्थः॥

(११) तृतीयपादे कवेः साम्यवादप्रसक्तिस्तुरीयपादे नृपपदावज्ञा च स्फुरति॥

(१२) आनन्ददायिनां पदार्थानां संग्रहोऽत्र पद्ये कविना संघटितः। मधुपात्रस्याभ्यर्हितत्वात्प्रथमप्रयोगः। पूपः लघुभोज्यम्॥

(१३) अनिश्चितं पारलौकिकं सुखमिच्छतामैहिकत्यागो मौढ्यविलसितमेवालब्धमभिलष्य लब्धस्य परित्यागो मौर्ख्यमेव। वरमद्य कपोतः श्वो मयूरात्॥

(१४) कौशेयकरोटकं पट्टसूत्रनिर्मितं वसुभाण्डग्रन्थिम् ॥

(१५) संचितकनकानां निसृष्टकनकानां च प्रेत्य भेदो न लभ्यते ॥

(१६) भौतिकाशा ऐहिकसंपदभिलाष: । हैमकण: हिम बिन्दु: ॥

(१७) अयं लोक: पान्थायतनमित्युच्यते । देहिनो ह्यत्र पथिका: ॥

(१८) सरट: कृकलास: । सौध एव सम्प्रति वनतां गत इति भाव: । तथा खराणामाखेटनिपुणस्य निखननभूमौ मत्स-रादिव वन्यखरे नृत्तमाचरत्यपि स प्रतिकर्तुमशक्त इव निद्रातीत्यर्थ: । अहो तुच्छता मर्त्यानाम् ॥

(१९) रोजा वीरनृपस्य रक्तात् जाता न चेत् तादृक्ष-रागा न विलसेत् । नवकेतकं सुतनो: धम्मिल्लात् विमुक्तं न चेत् तथा अभिरामं न विलसेदित्यन्वय: । अतीतकालसौभाग्यानि साम्प्रतं सुन्दराणि वस्त्वन्तराणि परिणतानि इति मन्ये ॥

(२०) नदीतटे प्रादुर्भाव ओषधेश्चुम्बनमित्युत्प्रेक्ष्यते ॥

(२१) यत् भाजनं मधुपात्रम् । श्वस्त्यस्य श्वोभाविन: । विजहीहि त्यज । श्वो जीवितमेव को वेद ?

(२२) मृद्वी: द्राक्षा: । पूर्वे पुरुषा: कतिचिद्दिनानि सुख-मुषित्वा पश्चतां शनै:शनैरविशन्नित्यर्थ: ॥

(२३) मधुर्वसन्त: । वस्ते धारयति । नवसूनपट्टं नव-पुष्पदुकूलम् । यथापूर्वं मनोहारी विराजत इत्यर्थ: । तल्पं भवेन्न: पृथिवी, परेता: पृथिवीमेव प्रवेक्ष्याम इति भाव: ।

(२४) मृदि प्रपातात् पूर्वमित्यन्वयः । दिष्टः कालः । मृन्मात्रगात्रं मृद्विकारभूतं शरीरम् । महाभूतसंयोगजन्यं चैतन्यमिति मतमत्र स्फुरति ॥

(२५) इहलोके भाविसुखाय स्पृहयतां लोकान्तर एव सुखं प्रतीक्षमाणानां चोभयेषां नास्त्येव सुखलाभ इति कश्चित्तिमिरोपगूढविग्रहो वदतीति मन्ये ॥

(२६) यमिनोऽपि मन्दात्मतुल्यं प्रमृष्टाः । कालेनेति शेषः । मृदाभिनद्धं मृत्तिकापूरणेन कृतबन्धनं जातम् । पुटपाकाय घटादीनामिव तद्वास्यानां मृल्लेपनेन मौनमापादितम् ॥

(२७) तत्त्वज्ञवादान् दार्शनिकानामुक्तीः । प्रवेशो निर्गमश्चैकद्वारक इत्युक्त्या यत्नवैफल्यं प्रकाश्यते ।

(२८) अपूपुपं अपोषयम् । वारिवत् प्राप्तः, वायुवत् यास्यामि इत्युक्त्या सम्प्रति लाघवातिरेको ध्वन्यते ॥

(२९) जगतः परेयां लोकात् तिरोदध्याम् । मरिष्यामीत्यर्थः ॥

(३०) वैयात्यचिन्ता विधेर्धाष्ट्र्यस्यालोचनम् । निषिद्धमित्युक्त्या मधुपानं तन्मतानुसारेणापि पापहेतुरित्यवगम्यते ॥

(३१) व्यश्लथयं शिथिलीकृतवानस्मि । सप्तमनाकलोकं अध्यतिष्ठमित्युक्त्या तत्पर्यन्तवर्त्तिनामपि नास्ति लोकरहस्याधिगम इति द्योत्यते ॥

(३२) *गतकुञ्चिकं उद्घाटनकरणरहितम् । जवनी तिरस्करिणी च जीवात्मपरमात्मनोरैक्यवरणभूतं अज्ञानं इत्यादि यथाप्रतिभं वर्णयन्ति । लोकरहस्याज्ञानं स्यात्तत् । किञ्चित्कालं

* कुञ्चिका-Key.

जीवानधिकृत्य किमपि किमपि तर्कितमासीत्। अन्ततः किमप्य-निर्णीय सर्वं परित्यक्तमित्यर्थोऽपि संभाव्यते ॥

(३३) पृथ्वी, भर्तुरदर्शनात् विलपन्ती अङ्घ्रिघ्रीची च प्रत्युत्तरं न दत्ते। विहायाः च न चष्टे न कथयति। दिनेन चिह्नानि प्रदर्श्य रात्र्या चाच्छाद्य चलन्ति ते विहायसो विशेषणम् ॥

(३४) मयि वर्तमानं त्वां जीवात्मनस्तत्त्वभूतं परमात्मानम्। न्यशामि श्रुतम्। त्वयि सस्थितोऽहमन्धः जीवात्मनि वर्तमाना-हंबुद्धिस्तत्त्वदर्शनासमर्था इत्यर्थः ॥

(३५) मृत्पात्रं मृन्मयं भाजनम्। मर्त्यपदार्थोपलक्षण-मेतत् ॥

(३६) इदानीं मृत्पात्रतया परिणतमेतत् वस्तु प्राक्चेतनं भोगभोक्तृ चासीत् इति स्वयमुत्प्रेक्षते ॥

(३७) अयने मार्गे। मृदान मर्दय।

(३८) आम्रेडितेन आवृत्यकथनेन। नजातभव्यं अनु-त्पन्नं भावि। परेतभूतं मृतप्रायमतीतम् ॥

(३९) नाशमरौ शून्यप्रायेऽत्र मरुभूमौ। शून्यत्वकाल्यं शून्यावस्थायाः प्रादुर्भावं प्रति। सर्वशून्येऽत्र जीविते क्षणमेक-मधिगतं सुखानुभवाय विनियुज्यताम् ॥

(४०) वन्ध्येषु वादेषु निरर्थकेषु शास्त्रवादेषु। मृद्वी द्राक्षा।

(४१) सपीतिः सहपानम्। द्राक्षातनुजा मदिरा। जरठां युक्तिं त्यक्त्वा युवतिं मदिरां परिणीतवानहमिति चारितार्थ्य-प्रकाशनमिदम् ॥

(४२) रेखोन्मितं सूक्ष्मतमम्। सुरायाः परिमाणकार्ये

ऊढयत्न एव नतु फलितोद्यमः। अपरिमेयप्रभावा मदिरेति यावत्॥

(४३) गञ्जा पानगृहम्। समैत् समागतः॥

(४४) रासयोगी रसयोजननिपुणः। यः नरजीवसीस-मपि जातरूपं सुवर्णं विदध्यात्॥

(४५) लोकायतवादलोलानिति भीशोकमुख्यानित्यस्य वि-शेषणम्। मधुः सर्वमनोविकारहरणेन परमानन्ददानक्षमो राजा-धिराज एवेत्यर्थः॥

(४६) प्रवेकः श्रेष्ठः। दानप्रह्वौ मधुन एव।

(४७) प्रपञ्चः मायाविमायाविहृतिः ऐन्द्रजालिकमायाक्री-डामात्रम्। समुद्गः लघुपेटकः।

(४८) शीधुं पीतवतामपि शून्यतैव गतिरित्यपरिहरणीय-मेतत्। तत्र कः शोकावकाशः?

(४९) नीला हाला मृत्युरूपा॥

(५०) शारिपट्टं चतुरङ्गाख्यक्रीडाविशेषफलकम्। प्रपेटः शारिपेटकः।

(५१) कन्दुकोऽसौ नियतीच्छानुसारेण ताड्यमानो नर-रूपः कन्दुकः।

(५२) करो विधेः पाणिः। नरस्य भक्त्यादिभिर्न तस्य लेशेनाप्यन्यथाभावः संपद्यते।

(५३) उपरि दृश्यमानमन्तरिक्षमधोमुखतां नीतं शून्यं पानपात्रमेव। तदभिमुखं हस्तप्रसारणं च विफलम्।

(५४) आद्यमृत्स्ना प्रथममृत्तिका। निर्माणादौ यल्लिखितं तदन्तेऽनुवाचनीयम्। न तस्य कदापि परिवृत्तिः

(५५) गगनोज्ज्वलाश्व: सूर्य:। आगां प्राप्तवानसि। गुरु-कृत्तिकाभि: सहेति शेष:॥

(५६) अररं कवाटम्। व्रतिभिर्निरुद्धं कवाटं मम कुक्षि-कोद्घाटयेदिति यावत्। व्रतिनो मदिरां प्रतिषेधयन्ति तामहं सेविष्य इति भाव:॥

(५७) अमलप्रकाश: ईश्वर: मयि स्निह्येत् अथवा दहेत्। अस्मिन् पद्ये गङ्गाशब्द: साक्षात्कारानन्दास्वादनस्थानमिति प्रति-भाति॥

(५८) विधातृवशवर्तिन: प्राणिजातस्य न कर्मणि स्वात-न्त्र्यम्। अत: कोऽपि न गर्हणीय इति भाव:॥

(६०) नरवक्त्रपङ्कं मनुष्यमुखकलङ्कम्। नियते पापं क्षमस्व। स्वकृतिनिर्मितत्वात्। मर्त्यान् क्षमां याचस्व। स्वाप-राधं प्रतीति भाव:।

(६१) व्रतमत्र मासोपवासरूपम्। अत्र मृद्विकारशरीर-भाजो मनुष्या एव घटा इति वर्ण्यन्ते॥

(६२) मनुष्येषु वाग्मिनो वचनासमर्थाश्च सन्ति। तेषां स्वभावविशेषा इह वर्ण्यन्ते॥

(६३) पीतशीधु: पीत: शीधु: यस्मात् स:। प्रभङ्क्ता-भङ्क्ष्यति। लुडन्तमेतत्॥

(६४) विकलाङ्गमेतमित्यात्मपरामर्शेन कथनम्॥

(६५) अलं लिम्पन्ति अत्यन्तं मलिनीकुर्वन्ति॥

(६६) स्मृतिनाशदैर्घ्यात् चिरविस्मृतत्वात्। मृत् अति-शुष्का मच्छरीरं बहुक्लेशजालसहनशुष्कमित्यर्थ:॥

(६७) चन्द्रकलामपश्यत्। चन्द्रकलादर्शनं व्रतावसान-समय:। भरवाहकस्य मदिराघटभारवोढु:। सन्धे: प्रभङ्ग सन्ध्यस्थिविघटनशब्दम्। सर्वे मदिरानयनप्रतीक्षा अवर्तन्तेति सूच्यते॥

(६८) पीतमार्द्वीकस्य मृत्युरपि मे श्रेयान् इति सारार्थः।

(६९) निखातदेहस्य भूमौ निहितस्य मच्छरीरस्य। आस्तिक्यसिद्धान्तनिबद्धचित्ताः मतश्रद्धाजाड्येन परिहृतमार्द्वीकाः। अविज्ञाय न गच्छन्तु कुतोऽयं सुगन्ध इति विस्मिताः कारणमस्य जानन्तु॥

(७०) गाधनिपे उत्तानचषके। समज्ञां कीर्तिम्। देवानामाराधनेनालब्धनिर्वृतिरहं चषकं गानं चाश्रितवानस्मि। अतस्त एव मदभिममानभङ्गहेतव इति भावः॥

(७१) अतन्वि अकरवम्। अनुशयप्रतिज्ञां पश्चात्तापेन सह मधुवर्जनप्रतिज्ञाम्। वसन्तो यदा पुनरागतः तदा प्रतिज्ञां व्यसार्षमिति मदिरायाः प्रभावोक्तिः॥

(७२) मदिरोपजीवी मद्यविक्रयकर्ता। निमयं मूल्यधनम्। मधुनो मूल्यस्यापरिमितत्वात्तदर्थे वितीर्णं यत्किमप्यपर्याप्तमेवेति भावः॥

(७३) सुरभिर्मनोहरः। तारुण्यलेखः यौवनग्रन्थः। सर्वमपि मनोहरं वस्तु क्षणभङ्गुरमेव॥

(७४) विधा सृष्टिपद्धतिः। यदि पुनरावां नियतिसाहाय्येन सृष्टिशक्तिं विन्देव तर्हि किमप्यन्यादृशमेव नूत्नं लोकं रचयेवेति प्रेयसीं वदन् प्रपञ्चस्यास्य दुःखभरिततामाविष्करोति।

(७५) अक्षय्यमोदेन्दुकले इति प्रेयस्याः संबुद्धिः। इतो गतं भाग्यवन्तं मां दिदृक्षुः पूर्णचन्द्रो वारंवारमन्विष्यन् भग्नाश एव भविष्यतीति स्वानन्तरावस्थोल्लेखः।

(७२) निर्यातस्य निखातस्य ममोपरि त्वं शून्यचषकं परिवृत्य प्रक्षिप। तदेकमेव मम निर्वृतये पर्याप्तमिति प्रियां प्रत्यन्तिमोऽयमुपदेशः॥

चार्वाकाणामपि मतं सर्वदर्शनसंग्रहे।
निबद्धं दृश्यते यस्मात्तस्माद्व्याख्या मया कृता॥

Prined at the Saraswathi (Elec.) Ptg. & Pbg. House,
Trichur.